# श्रीत्रिपुरसुन्दरीसान्निध्यस्तवः

॥ श्री गणेशाय नमः ॥

कल्पभानुसमानभास्वरधाम लोचनगोचरं
किं किमित्यतिविस्मिते मयि पश्यतीह समागताम्।
कालकुन्तलभारनिर्जितनीलमेघकुलां पुरः
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १ ॥

एकदन्तषडाननादिभिरावृतां जगदीश्वरीम्
एनसां परिपन्थिनीमहमेकभक्तिमदर्चिताम्।
एकहीनशतेषु जन्मसु संचितात्सुकृतादिमां
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ २ ॥

ईदृशीति च वेदकुन्तलवाग्भिरप्यनिरूपिताम्
ईशपङ्कजनाभसृष्टिकृदादिवन्द्यपदाम्बुजाम्।
ईक्षणान्तनिरीक्षणेन मदिष्टदां पुरतोऽधुना
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ३ ॥

लक्षणोज्वलहारशोभिपयोधरद्वयकैतवात्
लीलयैवदयारसस्रवदुज्वलत्कलशान्विताम्।
लाक्षयाङ्कितपादपातिमिलिन्दसन्ततिमग्रतः
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ४ ॥

ह्रीमिति प्रतिवासरं जपसुस्थिरोऽहमुदारया
योगिमार्गनिरूढयैक्यसुभावनां गतया धिया।
वत्स हर्षमवाप्तवत्यहमित्युदारगिरं पुरः
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ५ ॥

हंसवृन्दमलक्तकारुणपादपङ्कजनूपुर-
क्वाणमोहितमादरादनुधावितं मृदु श्रृण्वतीम्।
हंसमन्त्रमहार्थतत्वमयीं पुरो मम भाग्यत
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ६ ॥

सङ्गतं जलमभ्रवृन्दसमुद्भवं धरणीधराद्
धारया वहदञ्जसा भ्रममाप्य सैकतनिर्गतम्।
एवमादिमहेन्द्रजालसुकोविदां पुरतोऽधुना
चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ७ ॥

कम्बुसुन्दरकन्धरां कचवृन्दनिर्जितवारिदां
कण्ठदेशलसत्सुमङ्गलहेमसूत्रविराजिताम्।
कादिमन्त्रमुपासतां सकलेष्टदां मम सन्निधौ
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ ८ ॥

हस्तपद्मलसत्त्रिखण्डसमुद्रिकामहमद्रिजां
हस्तिकृत्तिपरीतकार्मुकवल्लरीसमचिल्लिकाम्।
हर्यजस्तुतवैभवां भवकामिनीं मम भाग्यतः
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ ९ ॥

लक्षणोल्लसदङ्गकान्तिझरीनिराकृतविद्युतं
लास्यलोलसुवर्णकुण्डलमण्डितां जगदम्बिकाम्।
लीलयाखिलसृष्टिपालनकर्षणादिवितन्वतीं
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ १० ॥

ह्रींमिति त्रिपुरामनुस्थिरचेतसा बहुधाऽर्चितां
हादिमन्त्रमहाम्बुजातविराजमानसुहंसिकाम्।
हेमकुम्भघनस्तनाञ्चललोलमौक्तिकभूषणां
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ ११ ॥

सर्वलोकनमस्कृतां जितशर्वरीरमणाननां
शरवदेवनमनःप्रियां नवयौवनोन्मदगर्विताम्।
सर्वमङ्गलविग्रहां मम पूर्वजन्मतपोबला
च्चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ १२॥

कन्दमूलफलाशिभिर्बहु योगिभिश्च गवेषितां
कुन्दकुड्मलदन्तपङ्क्तिविराजितामपराजिताम्।
कन्दमागमवीरुधां सुरसुन्दरीभिरिहागतां
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ १३॥

लत्रयाङ्कितमन्त्रराड्गमलंकृतां जगदम्बिकां
लोलनीलसुकुन्तलावलिनिर्जितालिकदम्बकाम्।
लोभमोहविदारिणीं करुणामयीमरुणां शिवां
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ १४॥

ह्रींपराख्यमहामनोरधिदेवतां भुवनेश्वरीं
हृत्सरोजनिवासिनीं हरवल्लभां बहुरूपिणीम्।
हारकुण्डलनूपुरादिभिरन्वितां पुरतोऽधुना
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ १५॥

श्रीं सुपञ्चदशाक्षरीमपि षोडशाक्षररूपिणीं
श्रीसुधार्णवमध्यशोभिसरोजकाननचन्द्रिकाम्।
श्रीगुहस्तुतवैभवां परदेवतां मम सन्निधौ
चक्रराजनिवासिनीं त्रिपुरेश्वरीमहमाश्रये ॥ १६॥

॥ इति श्रीमत्रिपुरसुन्दरीसान्निध्यस्तवः संपूर्णः ॥

# श्रीधर्मसंवर्धनीस्तोत्रम्

॥ ॐ श्रीगणेशाय नमः ॥

कल्याणी कमनीयतूलकबरी कल्हारमालाञ्चिता
कस्तूरीतिलकाङ्कफालफलका कामेश्वरप्रेयसी।
काम्या कामकलात्मिका करलसच्चापेक्षुपाशाङ्कुशा
कल्याणानि करोतु मे भगवती श्रीधर्मसंवर्धनी ॥ १ ॥

एतावत्तदिति प्रमाम् अतिगताम् एणीकिशोरेक्षणाम्
एकान्तापचितिप्रसन्नहृदयाम् एकाधिपत्यप्रदाम्।
एवंभूतचराचरैकजननीम् एणाङ्कचूडप्रियाम्
एधेमह्यधिकं प्रपद्य शरणं श्रीधर्मसंवर्धनीम् ॥ २ ॥

ईशोत्सङ्गविहारलोलहृदयाम् ईहाविहीनाशयाम्
ईडानाखिलवाञ्छितार्थजननीम् ईशानसंसेविताम्।
ईदृग्विश्वजनिस्थितिक्षतिकरीम् ईतिव्यथानाशिनीम्
ईडेऽहं परदेवताम् भगवतीं श्रीधर्मसंवर्धनीम् ॥ ३ ॥

लक्ष्मीवल्लभभारतीपतिशचीपत्यादिसंपूजिता
लब्धानेकजनुःसुकर्मनिचयैर्लभ्यङ्घ्रिसेवारसा।
लावण्यामृतसारसागरतनुर्लक्षागमैर्लक्षिता-
लब्धार्था ललना लसेन्मनसि मे श्रीधर्मसंवर्धनी ॥ ४ ॥

ह्रींकाराम्बुजकर्णिकान्तरमहासिंहासनाध्यासिनी
ह्रीणात्मीकृतसर्वलोकललनारत्नस्वलावण्यभा।
ह्रीश्रीभीधृतिबुद्धिसंस्मृतिरतिश्रद्धाक्षमारूपिणी
ह्रींनामा ममदुःखमाशु हरतु श्रीधर्मसंवर्धनी ॥ ५ ॥

हस्ताहस्तिविधायिपीवरकुचा हस्तीन्द्रकुम्भैः समं
हानादानविवर्जिता हरिमणिश्यामावदातेक्षणा।
हंसाध्येययपदक्रमा हरिहयब्रह्माच्युतेशार्चिता
हन्यान्मे हतकिल्बिषं हरसखी श्रीधर्मसंवर्धनी ॥ ६॥

सर्वाङ्गीणविभूषणा समरसा संविन्मयी सात्विकी
साध्या सागरमेखलाधरसुता सर्वज्ञसंमोहिनी।
सत्यानन्दचिदाकृतिः सरसवाक् सन्तुष्टचित्तास्तु मे
संसारार्णवतारणैकतरणिः श्रीधर्मसंवर्धनी ॥ ७॥

कल्या काञ्चनकुण्डलाङ्गदधरा कण्ठे मणीमालिका
कटयां काञ्चनकाञ्चिदामलसिता कादम्बसञ्चारिणी।
काले कल्पितविश्वसृष्टिविलया कात्यायनी कामदा
कामं मे कठिनस्तनी कलयतु श्रीधर्मसंवर्धनी ॥ ८॥

हत्याद्युत्कटपापकूटदहनज्वालायमानाभिधा
हस्तैर्हाटककङ्कणावलिधरा हंसावलीसेविता।
हारालीपरिशोभमानविपुलप्रोत्तुङ्गवक्षोरुहा
हत्याहन्तृकला निहन्तु मदघं श्रीधर्मसंवर्धनी ॥ ९॥

लब्ध्वव्यालघुलब्धभक्त्यतिशयैर्लास्यप्रिया लाकिनी
लाक्षारञ्जितपादपद्मयुगला लज्जापदार्चाप्रिया।
लाभालाभसमानचित्तमुदिता लङ्केशवैर्यर्चिता
लक्ष्यात्मा ललिता लगेन्मनसि मे श्रीधर्मसंवर्धनी ॥ १०॥

ह्रींकारामलदुग्धसागरसुधा ह्रींकारपद्मेन्दिरा
ह्रींकाराङ्कितमन्त्रजापकजनाभीष्टार्थसन्दायिनी।
ह्रींकारामृतवापिका कमलिनी ह्रींकारपेटीमणिः
क्षिप्रं मद्विषतां कुलं ह्रसययु श्रीधर्मसंवर्धनी ॥ ११॥

सर्वानन्दकरी समस्तजननी सत्कर्मसन्तोषिणी
सव्यासव्यपथार्चिताङ्घ्रिकमला संपूर्णसम्पत्करी।
साध्वी सद्गतिदायिनी सदसदाकारा समा साक्षिणी
सर्वज्ञा मम संक्षिणोतु दुरितं श्रीधर्मसंवर्धनी ॥ १२॥

कन्यापूजनसंप्रहृष्टहृदया कल्पद्रुमूलासिनी
काव्यालापविनोदिनी कलिमलप्रध्वंसिनी कामिनी।
कल्याणाचलकार्मुकप्रियतमा कल्याणशैलालया
कामं कामधुगस्तु मे भगवती श्रीधर्मसंवर्धनी ॥ १३॥

लक्ष्या लक्षणबोधकश्रुतिशिरः सीमन्तवाक्यालिभि-
र्लज्जाढ्या लगदिष्टकल्पलतिका लग्नाशये योगिनाम्।
लक्ष्मीवल्लभसोदरी लयकरी लज्जापदाध्यासिनी
लालित्यैकनिधिर्लगेन्मनसि मे श्रीधर्मसंवर्धनी ॥ १४॥

ह्रींकारामृत भानुमण्डललसज्ज्योत्स्नाभिरामाकृति-
ह्रींकारोदयमेदिनीधरकठोराभीषुबिम्बप्रभा।
ह्रींकारैकपरायणाभिलषिताशेषार्थचिन्तामणि-
र्हृष्येन्मे मधुनायकप्रणयिनी श्रीधर्मसंवर्धनी ॥ १५॥

मधुनाथमनोमोदमकरालयचन्द्रिका।
धर्मसंवर्धनी देवी धर्मे संवर्धयेन्मम॥

॥ इति श्रीगोमतीदासकृतं श्रीधर्मसंवर्धनीस्तोत्रम् संपूर्णम्॥

# श्रीमीनाक्षी पञ्चदशी स्तोत्रम्

॥ ॐ श्रीगणेशाय नमः ॥

कस्मात्पर्वतराजराजतनये त्वत्पादपद्मे नतम्
दीनं मां समुपेक्षसे मम दृशोः भानं कुतो लुप्यते।
को वा त्वत्चरणारविन्दभजनं कुर्वन् कृती भूतले
दारिद्र्यं लभते कथं च जननी दृष्ट्या विहीनो भवेत् ॥ १ ॥

एवं पाण्ड्यनृपात्मजेति भुवने को वा जगन्मातरम्
स्तोतुं त्वां निपुणो महेश्वरी शिवे नाहं समर्थस्ततः।
एतन्न्याय्यमिति त्वमेव मनसा निश्चित्य संगृह्य माम्
चक्षुष्मन्तमथाढ्यमाशुकुरुषे यद्यम्ब माता मम ॥ २ ॥

ईशात्वं सकलार्थ दान निपुणा कर्मानुसारान्नृणाम्
पूर्वं त्वं बहुपाप कर्म कृतवान् एतत्फलं भुज्यताम्।
ईशित्रीति तवाम्बिके भगवति नामार्थशून्यं भवेत्
त्वद्भक्तैः कृतकार्यमत्र सकलं नोचेत्तवाराधनम् ॥ ३ ॥

लक्ष्मीं क्षीरसमुद्रराजतनयां त्वद्भक्तगेहे स्थिराम्
कर्तुं शक्तिरहो तवास्ति जननि गेहे परं मे कुतः।
लक्ष्मीस्थापन मुख्यकार्य विमुका त्वं भासि सर्वेश्वरी
लक्ष्मीं स्थापय शीघ्रमेव भवती चक्षूच्च सन्देहि मे ॥ ४ ॥

ह्रींकारार्णव कौस्तुभां भगवतीं श्रीपाण्ड्यराजात्मजाम्
भक्तत्राण परायणां हरिहरब्रह्मादिवन्द्यां शिवाम्
ह्रींमध्यां त्रिदशेश्वरीं त्रिनयनश्रीतुल्य सौभाग्यदाम्
वन्देहं मम दृष्टिदोष तमसां भेत्रीं परामम्बिकाम् ॥ ५ ॥

हत्वा शुम्भनिशुम्भमुख्यदितिजान् देवेप्सितार्थप्रद
दुर्गा मामकचक्षुषः तिमिरमप्यद्याऽशु विध्वंसयेत्।
हत्वा चाक्षुषदोषमद्यजननी मां पालयेत् बालकम्
तां नित्यं प्रणतोस्म्यहं विनयतः सेवे जगत्पालिनीम् ॥ ६॥

सर्वेशीं निजभक्तकल्पलतिकां कामेश्वरीं कामदाम्
सर्वज्ञां सदसद्विलक्षण जगत्सत्ताप्रदां शाश्वतीम्।
सत्यज्ञान सुखात्मिकां भगवतीं मायामयीं मोहिनीम्
वन्देऽहं मधुरेश्वरीं नयनयोः दिव्यप्रकाशाप्तये ॥ ७॥

कस्त्वं किं फलमिच्छसीति जननीप्रश्ने नकश्चिच्छिवे
वक्तुं त्वां निपुणः त्वमेव चतुरा ज्ञातुं स्वरूपं मम।
कोऽहं ब्रूहि महेश्वरोहं इति वा त्वं वाहमेवाम्बिके
को भेदःशिवयोः तथैव शिवदे जीवेशयोर्वा कथम् ॥ ८॥

हंसीत्वं भुवनेति शङ्करगुरोः वाक्येन जानाम्यहम्
त्वामेवाम्ब ममापिदोषमखिलं कृत्वा गुणं पालय।
हंसस्सोहमितीह मन्त्र जपतः प्रत्यक्षतो दर्शनम्
त्वद्रूपस्य ममाऽपि देहि शिवदे श्रीराजराजेश्वरि ॥ ९॥

लक्ष्मीं देहि सदा ममाऽपि कृपया श्रीपाण्ड्यराजात्मजे
दोषं चाक्षुषमप्यसह्यमेव नितरां दूरीकुरुत्वं शिवे।
लक्ष्मी वाङ्मुखदेवताभिरनिशं संस्तूयमानां पराम्
त्वामेवात्र समाश्रये नहि परा देवी त्रिलोक्यां खलु ॥ १०॥

ह्रीं बीजैः त्रिविधैः शिखासु घटिताः खण्डाः त्रयः शङ्करि
यस्मिन् मन्त्रवरे सचापि मनुराट् यस्याः स्वरूपं शिवे।

ह्रीं मायेति च कथ्यते बुधवरैः या शक्तिराद्यापरा
सा त्वं देवि नमस्करोमि भवतीं देह्यात्मचक्षुः परे ॥ ११ ॥

सर्वे विष्णुमुखाः सुराश्च जननि त्वच्छासने संस्थिताः
तस्माद्देवि नवग्रहाः तव मते स्थित्वैव सौख्यप्रदाः।
सत्येवं मम दुःखमेव बहुधा कुर्वन्ति सूर्योदयः
देवाः त्वत्पदपद्ममेव शरणं प्राप्तोऽस्मि मां पालय ॥ १२ ॥

कष्टं त्वद्भजने निवर्त्तत इति श्रुत्वा भजाम्यंबिके
त्वामेवाद्य तथाऽपि मे नहि सुखं तत्कारणं ब्रूहि मे।
कष्टात्कष्टपरंपरा मम गृहे संवर्धते मानदे
मातुस्ते शिशुपालनात् विमुखता नैवोचिता शाम्भवी ॥ १३ ॥

लाभोयं परमः महेश्वरि शिवे त्वत्पूजने यन्मनः
नित्यं वर्तत इत्यहो भगवति तत्र स्थिरं कुर्विदम्।
लक्ष्मीं वा हरिनाभिपद्मजसखीं नित्यं वशे मे कुरु
मुख्यं मे नयनस्य पाटवमपि त्वं देहि मातः परे ॥ १४ ॥

ह्रींबीजाक्षरवासिनि शशिकले श्रीचक्र रूपेशिवे
मीनाक्षि मलयध्वजाधिपसुते श्रीसुन्दरेशप्रिये।
ह्रीं ह्रीं ह्रीमिति मन्त्रराजमनिशं जप्त्वाऽम्बिकां त्वामहम्
दृष्टुं देहि ममाद्य चक्षुरमलं त्वां पूजयाम्यन्वहम् ॥ १५ ॥

॥ इति श्रीमीनाक्षी पञ्चदशी स्तोत्रं संपूर्णम्॥

# ॥ श्रीललिताम्बापरमेश्वरस्तवः ॥

## ॥ ॐ श्रीगणेशाय नमः ॥

कलयतु कल्याणततिं कमलासखपद्मयोनिमुखवन्द्यः ।
करिमुखषण्मुखयुक्तः कामेशस्त्रिपुरसुन्दरीनाथः ॥ १ ॥

एकैवाहं जगतीत्यायोधनमध्य अब्रवीद्यादौ ।
शुम्भं प्रति सा पायादाद्या शक्तिः कृपापयोराशिः ॥ २ ॥

ईषदिति मन्यते यत्पदभक्तः शंभुविष्णुमुखपदवीः ।
सा मे निश्चलविरतिं दद्याद्विषयेषु विष इवात्यन्तम् ॥ ३ ॥

लभते परात्मविद्यां सुदृढामेवाशु यत्पदासक्तः ।
तां नौमि बोधरूपामाद्यां विद्यां शिवाजमुखसेव्याम् ॥ ४ ॥

ह्रीमान्भवेत्सुरेशस्तद्गुरुरपि यत्पदाब्जभक्तस्य ।
लक्ष्मीं गिरं च दृष्ट्वा सा मामव्यात्तयोः प्रदानेन ॥ ५ ॥

हसति विधुं हासेन प्रवालमपि पञ्चशाखमार्दवतः ।
अधरेण बिम्बमव्या त्सा मा सोमार्धमूर्धपुण्यततिः ॥ ६ ॥

सकलाम्नायशिरोभिस्तात्पर्येणैव गीयते रूपम् ।
यस्याः सावतु सततं गङ्गाधरपूर्वपुण्यपरिपाठी ॥ ७ ॥

कलिमलनिवारणव्रतकृतदीक्षः कालसर्वगर्वहरः ।
करणवशीकरणपटुप्राभवदः पातु पार्वतीनाथः ॥ ८ ॥

हरतु तमो हार्दं मे हालाहलराजमानगलदेशः।
हंसमनुप्रतिपाद्यः परहंसाराध्यपादपाथोजः ॥ ९॥

ललनाः सुरेश्वराणां यत्पदपाथोजमर्चयन्ति मुदा।
सा मे मनसि विहारं रचयतु राकेन्दुगर्वहरवदना ॥ १०॥

ह्रीमन्तः कलयति यो मूलं मूलं समस्तलक्ष्मीनाम्।
तं चक्रवर्तिनोऽपि प्रणमन्ति च यान्ति तस्य भृत्यत्वम् ॥ ११॥

सदनं प्रभवति वाचां यन्मूर्तिध्यानतो हि मूकोऽपि।
सरसां सालंकारां सा मे वाचं ददातु शिवमहिषी ॥ १२॥

करकलितपाशसृणिशरशरासनः कामधुक्प्रणम्राणाम्।
कामेश्वरीहृदम्बुजभानुः पायाद्युवा कोऽपि ॥ १३॥

लब्ध्वा स्वयं पुमर्थांश्चतुरः किंचात्मभक्तवर्येभ्यः।
दद्याद्यत्पदभक्तः सा मयि करुणां करोतु कामेशी ॥ १४॥

ह्रींकारजपपराणां जीवन्मुक्तिं च भुक्तिं च।
या प्रददात्यचिरात्तां नौमि श्रीचक्रराजकृतवसतिम् ॥ १५॥

श्रीमातृपदपयोजासक्तस्वान्तेन केनचिद्यतिना।
रचिता स्तुतिरियमवनौ पठतां भक्त्या ददाति शुभपङ्क्तिम् ॥ १६॥

इति श्रीललिताम्बापरमेश्वरस्तवः संपूर्णः ॥

# श्रीललिताम्बापरमेश्वरस्तुतिः

॥ ॐ श्रीगणेशाय नमः ॥

कल्याणशैलधन्वा
करधृतकुम्भाक्षमालिकामुद्रः ।
कलयतु मम संतोषं
करिचर्मधरः कृपापयोराशिः ॥ १ ॥

एकात्मकत्वधिषणा-
मेधयतीमीशजीवयोर्नमताम् ।
एकान्तवासलभ्या-
मेकां पुण्यावलिं नुमः शंभोः ॥ २ ॥

ईशोऽर्धवपुर्यस्या
ईप्सितपङ्क्तिर्यदाङ्घ्रिनतसुलभा ।
ईकाररूपिणीं ता-
मीश्वरपत्नीं हृदा सदा कलये ॥ ३ ॥

लभ्यन्तेऽखिलविभवा
लब्धावसरैर्यदीयमन्त्रजपे ।
लक्ष्मीगीर्विनुता सा
लक्ष्या भूयान्मदीयचित्तस्य ॥ ४ ॥

ह्रींकारपद्मभृङ्गौ
ह्रींकारावृत्तिशीलनरसुलभौ ।
ह्रींकारगिरिमृगेन्द्रौ
ह्रींकारेणैव भावयामि शिवौ ॥ ५ ॥

हरतादाशु जडत्वं
हरिदधिपाराध्यपादपाथोजः ।
हरिणाङ्ककलितचूडो
हृतवर्ष्मार्धः कुलाद्रिकन्यकया ॥ ६ ॥

सत्यं ज्ञानमितीमे
सकलाम्नाया वदन्ति यद्रूपम् ।
सद्गुरुमुखैकवेद्यां
सन्मतिदां नौमि तां परामनिशम् ॥ ७ ॥

कर्मभिरात्मानुगणैः
कलितामलभावचित्तकञ्जातैः ।
कतिपयपुरुपवरेण्यैः
कथमपि बुद्धं नमामि शशिमौलिम् ॥ ८ ॥

हतरिपुवर्गैः शान्तै-
र्हरिहयपद्मोद्भवादिपदविमुखैः ।
हंसकरैः परमाद्यै-
र्हस्ताम्बुजपूजितं नमामि हरम् ॥ ९ ॥

ललितां कवित्वसरणिं
लभते मूकोऽपि यत्कृपालेशात् ।
लङ्केशाहितविनुतां
लम्बोदरमातरं नमस्यामि ॥ १० ॥

ह्रींकारगेहगृहिणौ
ह्रींकारपयःपयोधिकल्पतरू ।
ह्रींकारवनमयूरौ
ह्रींकारशरीरिणौ शिवौ वन्दे ॥ ११ ॥

सम्यङ् निरुध्य चेतः
सकलानि निगृह्य करणानि।
सततं यतिभिर्हृदये
समाधिभाव्यां नमामि ललिताम्बाम् ॥ १२॥

कणभुक्कपिलाराध्यः
कथिताधिकसौख्यदानकृतदीक्षः।
करविधृतहरिणबालः
कलाभिवृद्ध्यै ममास्तु परमेशः ॥ १३॥

ललनाभिस्त्रिदशानां
ललितैर्गीतैः स्तुतात्मचारित्राम्।
लसदलकफालदेशां
लभ्यां योगैर्नमामि जगदम्बाम् ॥ १४॥

ह्रींकारसौधराजौ
ह्रींकाराम्भोधिपूर्णसितकिरणौ।
ह्रींकारवाच्यरूपौ
ह्रींनिष्कुटकोकिलौ शिवौ कलये ॥ १५॥

आदौ यन्मनुवर्णै-
र्घटिता रचिता स्तुतिर्येयम्।
सा ललिता तामूरी-
कुर्यादव्याजकरुणाङ्गी ॥ १६॥

॥ इति श्रीललिताम्बापरमेश्वरस्तुतिः संपूर्णं॥

# कल्पांदृष्टिपूजास्तुति स्तोत्रं

(श्रीषोडशोपचार मानसिकमन्त्रोक्तविधिना देवतास्तुतिः)

## ॥ ॐ श्रीगणेशाय नमः ॥

कल्याणोज्वलकार्मुकानिक्तकलानन्देनमन्दस्मितां
कारुण्यांकुशपञ्चबाणकलितां कन्दर्पदर्पोज्वलां।
काम्याकर्षण दिव्यपाशाभरितां बालार्ककोटिप्रभां
आदिक्षांततनुत्रयां त्रिनयनांऽप्रायेच्छिवां शाम्भवीम् ॥ १॥

एकाकारतया प्रपञ्चभरितामेकान्तसञ्चारिणीं
एणीकाज्वलसंविदांपरकलामेणामबिंबां परां।
एकोदेव इति प्रसिद्धमनुभिः प्राख्यात चिन्मातृकाम्
एकारांकित बैंदवी परशिवामेकाक्षरीमाहुवे ॥ २॥

ईशानादि महेन्द्ररुद्रपरिषद् ब्रह्मादिपादोन्नता
लंकारांकितदिव्यरत्नविलसत् सिंहासनेसुस्थिराम्।
ईषद्भक्तितया त्वदीय चरणांभोजार्चनोदीप्तवान्
इच्छाज्ञानक्रियात्मकासनमिदं गृह्णातुते शाम्भवम् ॥ ३॥

लक्षाज्ञानमयं सुधार्णवजलेनापूर्यपात्रार्पितं
लाक्षालंकृतपादपङ्कजयुगेसंक्षोभ्यभक्त्यापुनः।
लक्ष्मीरञ्जितहेमधामकलशेनापूर्यशीतांबुना-
स्वा चामार्थमिदं प्रकल्पितमदे गृह्णत्वं हे शाम्भवि ॥ ४॥

ह्रींकारोज्वलवर्णकल्पितकलालंकारसिंहासने
ह्रींकारादिसमस्तसिद्धकलनैः संस्तूयमाने मुदा।
गांगं चंद्रसचंदनं हिमजले सस्यानिजानेक्षती
मातर्देवि कृपां कुरुत्वमधुना स्नानेत्वमङ्गीकुरु ॥ ५॥

हव्यागूढतनुप्रकाशसुभगे क्षौमांबरो भक्तिते
हंसस्फाटिकचन्द्रिकाभिरमलं तन्वोत्तुरीमांसिसं

हारालंकृतपीवरस्तनभरामानंदमंदस्मिता
हव्यातीतमथामनंग विभवामाराधयामांबिकां ॥ ६ ॥

सौवर्णोज्वलरत्नकुण्डलधरां सौभाग्यनासामणि
सांद्रानंदकरीप्रसिद्धमणिभिः सोहंकिरीटंशुभम्
सर्वालंकृतबाहुदंडयुगल ग्रैवेयहारान् बहून्
सल्लोपाचित् हारनूपुरयुगं गृह्णातुते शाम्भवी ॥ ७ ॥

कस्तूरिघनसारकुंकुमरजोगंधोत्कटंचंदनं
कर्पूरच्छवि हारकाभिरमलं भक्त्यासमर्प्याक्षतैः
कल्हारोज्वलजातिपंकजरजः पद्मैश्चसौकेतकी
वनमल्लिका कल्पवृक्षकुसुमैरभ्यर्चयामीश्वरीम् ॥ ८ ॥

हाहाकाररवप्रसिद्धकलता हाकारहंतात्मकं
भूयोदेवि हि कल्पयामि सततं ब्रह्मेन्द्रवन्द्येशिवे
हंबीजार्ध कलात्मिकां तविभवेमल्यादिचक्रांकिते
हारिद्रांकितहेमधामकलशे गृह्णीष्वदीयंमहत् ॥ ९ ॥

लंबीजांकितसिद्धमार्गसहजैर्द्रव्यैरनंतैर्मुदा-
लंकारांकितवह्निभानुशशिभिःपात्रसुधापूरितैः
लिप्तामोद मारीचिर्हिंगुसुरभिः युक्तैस्तुभक्तैःसदा
लक्ष्मींचक्रनिवासिनीं कमलनीं संतर्पयामीश्वरीम् ॥ १० ॥

ह्रींकारत्रयवर्णपीठनिलये ह्रींकारमंत्रात्मिके
ह्रींकारोज्वल हेमधामचषकेसिद्यन्नभक्षान् वहन्
ह्रींश्रींकल्पितकामधेनुनियतः क्षीराज्यमध्वास्यत
ह्रींकारेण निवेदयामि सततं ह्रींकारनादप्रिये ॥ ११ ॥

सर्वाम्नायपरापरांतसलिलं सौगंधगन्धैर्युतं
सौन्दर्येश्वरवल्लभे परेशिवे गृह्णीयहस्तोदकं
सल्लायाणीवकौतुकामृतरसं संपूर्णचंद्रप्रभं
सत्करहारयुतं गृहाण वरदे तांबूलमव्यास्यतम् ॥ १२ ॥

कादिक्षांतस्वरादिवर्णमणिभिः संकीर्णदीपांकुराम्
कालैकत्रयपंचसप्तरवकनैवर्णपात्रैमुदा
काव्यालंकृत नाटकाविश्रुतिभिः संगीतनृत्यैमुहुः
कल्लोलांतमिदंगृहाणवरदे नीराजनंनिर्मलम् ॥ १३ ॥

लावण्यांगदैमदीयपंचकमिदं सन्मार्गमार्गोदयं
छत्रंचामरदर्पणं चमजनं दत्वाशिवेश्रादरात्
लीलापूजितपादपंकजयुगे संपूज्यगंधाक्षतैः
लक्ष्मीरंजितपादुका तु विभवां संतर्पयामीश्वरीम् ॥ १४ ॥

ह्रींकारीशिवतत्वमय्यनिलयां ह्रींकारमन्त्रात्मिकां
ह्रींकारत्रयवाग्भवादिमनुभिः संशोध्यतत्वंचयः
त्रकादिसहादिकादिमनुभिर्मत्वापुनःशांभवीं
स्तुत्वा शंकरवल्लभां त्रिनयनामुद्धासयामीकरीम् ॥ १५ ॥

वंदेशपादार्वितदृष्टिमुमयानिमाल्यविजार्चिविधासमर्थः
दुःखावलीक्षेत्रपतेप्रवक्ष्य विश्रामये भक्तिजनैर्मुहूर्मुदा ॥ १६ ॥

ध्यानावाहनमासनार्च्यकमिदं स्नानांबुकं भूषणं
गंधंचाक्षतपुष्पधूपममलं ज्योतिं च नैवेद्यकम्
तांबूलार्घ्यकच्छत्रचामरयुगं रत्नोज्वलंदर्पणं
मापूरव्यजनंप्रदक्षिणशतं नमस्कारान् गृहाणांबिके ॥ १७ ॥

कल्याणस्तुतिमेतदीयममलं ह्रींकारमंत्रात्मकं
सर्वाम्नायकरं महत्कविजनोलंकारह्रींकारदं
सर्वज्ञादिसमस्तसिद्धकमलै संस्तूयमानैर्मुदा
भक्त्यास्तोत्रमिदं पठेत् प्रतिदिनं ह्रींकारमेतिक्षणत् ॥ १८ ॥

॥ इति श्रीरुद्रयामले उमामहेश्वरसंवादे कल्पांदृष्टिपूजास्तुतिस्तोत्रं समाप्तम् ॥

## Humble request w.r.t Stotra #19 कल्पांद्दष्टिपूजास्तुति स्तोत्रं

This stotra 'Kalpaam Drishti Puja Stuthi' was originally a palm leaf manuscript and was digitised by eGangotri of Dharmartha Trust. The sanskrit lipi used in this old manuscript is ancient in nature. An attempt was made to convert to existing prevalent version of devanagari lipi.

I am presenting below the actual manuscript pages so that the sadhaka may make relevant changes/corrections. I humbly request you to send the changes or corrections made to my email id varamala@gmail.com, so that I can accommodate them in the stotra for the benefit of all.

ॐ अथषोडशोपचारमानसिकमंत्रोक्तविधिनादेवतास्तु
तिंपठेत् कल्याणोज्ज्वलकार्मुकांतिनकलानंदेनमंद।
स्मितां कारुण्यांकुशपंचबाणकलितांकंदर्पदर्पोज्ज्वलां
कामाकर्षणादिव्यपाशभरितांबालार्ककोटिप्रभा मादि
त्यांतनतुत्रयांत्रिनयनांध्यायेच्छिवांशांभवीम् १ प्रकाका
रतयाप्रपंचभरितामेकांतसंचारिणी मेणीकाज्वलसं
न्विदांपरकलामेणांकबिंबांपरां प्रकोदेवश्रुतिप्रसिद्धम

उभिः प्रख्यातचिन्मात्रकामैकाराङ्कितबैंदवीपरशिवामेका

त्तरीमाहुर्वै ईशानादिग महेंद्ररुद्रपरिषद्ब्रह्मादिपादो

न्नता लंकाराङ्कितदिव्यरत्नविलसत्सिंहासने सुस्थि

रे ईमझ्क्तित्याखदीय चरणाम्भोजार्चनोदीतवान्

इच्छाज्ञानक्रियात्मकासनमिदं गर्भस्तने शांभवे । ३ ल

नवं
ज्ञात्ता नसुधार्णवजलेनापूर्यपात्रार्पितं लाक्षालंकृत

पादपंकजयुगे संतोषभक्त्यापुनः लक्ष्मीरंजितहेम

थामकलशेनापूर्यपीतांबुना ख्याचामार्थमिदंप्रक।

ल्पितमजे रदेहूत्तंहे शांभवी । ४ ह्रींकारोज्वलवर्णक।

ल्पितकलालंकारसिंहासने ह्रींकारादिसमस्तसिद्धकलनैः

संस्तूयमाने सुदा ^ मातर्देविकृपांकुरुत्वमधुनास्नानेत्वमं।

गीकुरु ५ हव्यागरुघनत्वप्रकाशासभगेतोमांवरोभक्तिजे

हंसस्फाटिकचंद्रिकाभिरमलं तन्वोत्तरीमांसिसं हाराले

कृतपीवरस्तनभरामानंदमंदस्मिता हव्यातीनमथामनं

★ गांगंचंद्रसचंदनंहिमजले
सुस्यानिज्ञानेदानी ^ ४

गविभवामाराधयामांविकां ५ सौवर्णोज्वलरत्नकुंडलयशंसो

भाग्यनासामणी सांद्रानंदकरीप्रसिद्धमणिभिः सोहंकिरीटं

शुभं सर्वालंकृतबाहुदंडयुगलग्रैवेयहारान्वहन् सञ्जो

पाविन्हारनूपुरयुगेगरत्नांचितेशांभवी ७ कस्तूरीघनसा

रकुंकुमरजोगंधोत्कटंचंदनं कर्पूरच्छविहारकाभिरमलं

भक्त्यासमर्पीकृतैः कल्हारोज्वलजातिपंकजरजः पद्मश्च

सौकेतकी कांचनमल्लिककल्पवृक्षकुसुमैरभ्यर्चयामी

स्वरीम् ८ हाहाकाररवप्रसिद्धकलनाहाकारहंनात्म

कं धूपंदेविहिकल्पयामिसततं ब्रह्मेंद्रवंद्येशिवे ह्वंदी

जाद्यंकलान्विकांतविभवेमल्यादिचक्रांकिते हारिद्रां

कितहेमधामकलशेरत्नांस्वदीपंमहत् ९ लंबिजां

कितसिद्धमार्गसहजेदैवैरनंतैर्मुदा लंकारांकितनव

ञ्जिभानुप्राणिभिःपात्रसुधापूरितैः लिप्तामोदमरीचि

हिंगुसुरभिःयुक्तैसुभक्तैःसदा लक्ष्मीचक्रनिवासिनीक

मलनीसंतर्पयामीश्वरीम् ९ ह्रींकारत्रयवर्णपीठनिलयेह्रीं

कारमंत्रात्मिके ह्रींकारोज्वलहेमधामचषके सिद्धान्नभ

क्तान्वहन् ह्रींश्रीकल्पितकामधेनुनियतः दीराज्यम

धारुयत ह्रौंकारेणनिवेदयामिसततं ह्रींकारनादप्रिये ॥

सर्वाम्नायपरापरांतसलिलं सौगंधगंधेर्युतं सौंदर्यैश्वर

वल्लभेपरेशिवे स्वल्पीयहस्तोदकं सल्लायाणीवकोतवका

स्ततरसं संपूर्णचंद्रप्रभंसत्करसरयुतंगृहाणवरदे तांबू

लमवाप्यतं १२ कादिक्षांतस्वरादिवर्णमणिभिः संकीर्ण

दीपांकुराम् कालेकत्रयपंचसप्तरवकनेवर्णपात्रैमुदा

काव्यालंकृतनाटकाविष्कृतिभिःसंगीतनृत्यैर्मुहुः कल्लो

लांतमिदंगृहाणवरदेनीराजनंनिर्मलं १३ लावण्यांगदे

मदीयपंचकमिदंसन्मार्गमार्गोदयं छत्रं चामरदर्पणं च

मजनंदत्वाशिवेश्वादरात् लीलापूजितपादपंकजयुगे

संपूज्य गंधाद्यतैः लक्ष्मीरंजितपादुकात्रविभवांसंतर्पया

मीश्वरीम् १४ ह्रींकारीशिवतत्त्वमध्यनिलयां ह्रींकारमंत्रा
कां ह्रींकारत्रयवाग्भवादिमनुभिः संशोध्यतत्त्वस्य यःत्राको
दिसहादिकादिममुभिर्मत्वापुनःशांभवी मत्वाशंकरव
लभांत्रिनयनामुद्भासयामीकारीम् १५ चंदेशापादार्विनष्ट
ष्टिमुध्यातिर्मात्पविजार्चिविधासमर्पैः दुःखावलीद्योत्रपत्ते
प्रवस्यविश्वामयेभक्तिजनैर्मुहुर्मुदा १८ ध्यानावाहनमासना
र्घ्यकमिदंस्नानोक्ष्यकंभूषणं गंधंवाक्षतपुष्पधूपममलंज्यो

तिश्चनैवेद्यकं तांबूलार्घ्यकछत्रचामरयुगं रत्नोज्वलंद
र्पणं माप्यूरव्यजनं प्रदक्षिणशतं नमस्कारान्गृहाणांबि
के १७ कल्याणस्तुतिमेतदेयममलं ह्रींकारमंत्रात्मिकं
सर्वाम्नायकरंमहत्कविजनोलंकारह्रींकारदं सर्वज्ञादि
समस्तसिद्धकमलैः संस्तूयमानैर्मुदा भक्त्यास्तोत्रमिदंप
ठत्यतिजनो लंकारह्रींकारमेतत्क्षणात् १५ इतिश्रीरु
द्रयामलेउमामहेश्वरसंवादेकल्पाष्टष्टिपूजास्तुतिस्तोत्रं समा·

# श्रीमत्त्रिपुरसुन्दर्यपराधक्षमापणस्तवः

॥ ॐ श्रीगणेशाय नमः ॥

कञ्जमनोहरपादचलन्मणिनूपुरहंसविराजिते
कञ्जभवादिसुरौघपरिष्टुतलोकविसृत्वरवैभवे।
मञ्जुलवाङ्मयनिर्जितकीरकुलेऽचलराजसुकन्यके
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १ ॥

एणधरोज्ज्वलफालतलोल्लसदैणमदाङ्कसमन्विते
शोणपरागविचित्रितकन्दुकसुन्दरसुस्तनशोभिते।
नीलपयोधरकालसुकुन्तलनिर्जितभृङ्गकदम्बके
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ २ ॥

ईतिविनाशनि भीतिनिवारणि दानवहन्त्रि दयापरे
शीतकराङ्कितरत्नविभूषितहेमकिरीटसमन्विते।
दीप्ततरायुधभण्डमहासुरगर्वनिहन्त्रि पुराम्बिके
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ३ ॥

लब्धवरेण जगत्रयमोहनदक्षलतान्तमहेषुणा
लब्धमनोहरसालनिषण्णसुदेहभुवा परिपूजिते।
लङ्घितशासनदानवनाशनदक्षमहायुधराजिते
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ४ ॥

ह्रींपदभूषितपञ्चदशाक्षरषोडशवर्णसुदेवते
ह्रीमतिहादिमहामनुमन्दिररत्नविनिर्मितदीपिके।
हस्तिवराननदर्शितयुद्धसमादरसाहसतोषिते
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ५ ॥

हस्तलसन्नवपुष्पशरेक्षुशरासनपाशमहाङ्कुशे
हर्यजशंभुमहेश्वरपादचतुष्टयमञ्चनिवासिनि।
हंसपदार्थमहेश्वरियोगिसमूहसमादृतवैभवे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ६॥

सर्वजगत्करणावननाशनकर्त्रि कपालिमनोहरे
स्वच्छमृणालमरालतुषारसमानसुहारविभूषिते।
सज्जनचित्तविहारिणि शङ्करि दुर्जननाशनतत्परे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ७॥

कञ्जदलाक्षि निरञ्जनि कुञ्जरगामिनि मञ्जुलभाषिते
कुङ्कुमपङ्कविलेपनशोभितदेहलते त्रिपुरेश्वरि।
दिव्यमतङ्गसुताधृतराज्यभरे करुणारसवारिधे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ८॥

हल्लकचम्पकपङ्कजकेतकपुष्पसुगन्धितकुन्तले
हाटकभूधरशृङ्गविनिर्मितसुन्दरमन्दिरवासिनि।
हस्तिमुखाम्ब वराहमुखीधृतसैन्यवरे गिरिकन्यके
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ९॥

लक्ष्मणसोदरसादरपूजितपादयुगे वरदे शिवे
लोहमयादिबहून्नतसालनिषण्णबुधेश्वरसंवृते।
लोलमदालसलोचननिर्जितनीलसरोजसुमालिके
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १०॥

ह्रीमति मन्त्रमहाजपसुस्थिरसाधकमानसहंसिके
हेपितशीतकराननशोभिनि हेमलतेव सुभास्वरे।
हार्दतमोगुणनाशनि पाशविमोचनि मोक्षसुखप्रदे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ११॥

सच्चिदभेदसुखामृतवर्षिणि तत्वमसीति सदादृते
सद्गुणशालिनि साधुसमर्चितपादयुगे परशाम्भवि।
सर्वजगत्परिपालनदीक्षितबाहुलतायुगशोभिते
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १२॥

कम्बुगले वरकुन्दरदे रसरञ्जितपादसरोरुहे
काममहेश्वरकामिनि कोकिलकोमलभाषिणि भैरवि।
चिन्तितसर्वमनोरथपूरणकल्पलते करुणार्णवे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १३॥

हस्तकशोभिकरोज्ज्वलकङ्कणकान्तिसुदीपितदिङ्मुखे
शस्ततरत्रिदशालयकार्यसमादृतदिव्यतनूज्ज्वले।
कश्चतुरो भुवि देवि पुरेशि भवानि तव स्तवने भवेत्
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १४॥

ह्रींपदलाञ्छितमन्त्रपयोनिधिमन्थनजातपरामृते
हव्यवहानिलभूयजमानकखेन्दुदिवाकररूपिणि।
हर्यजरुद्रमहेश्वरसंस्तुतवैभवशालिनि सिद्धिदे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १५॥

श्रीपुरवासिनि हस्तलसद्वरचामरवाक्कमलानुते
श्रीगुहपूर्वभवार्जितपुण्यफले भवमत्तविलासिनि।
श्रीवशिनीविमलादिसदानतपादचलन्मणिनूपुरे
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १६॥

॥ इति श्रीमत्रिपुरसुन्दर्यपराधक्षमापणस्तवः संपूर्णः ॥

# नवावरणस्थ देवी गायत्री मन्त्राः

गायत्रीं तु समुच्चार्य तत्तदावृतिदेवताः।
पूजनीयाः प्रयत्नेन सर्वकामार्थसिद्धये॥ १॥
इति वचनाच्छ्रीचक्रावरणदेवीनां गायत्र्यः प्रोच्यन्ते -

ॐ ऐं ह्रीं श्रीं-तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात्
- इति गणपति गायत्री॥
ॐ ऐं ह्रीं श्रीं-आपदुद्धरणाय विद्महे वटुकेश्वराय धीमहि तन्नो वीरः प्रचोदयात्
- इति वटुक गायत्री॥
ॐ ऐं ह्रीं श्रीं-दिगम्बराय विद्महे कपालहस्ताय धीमहि तन्नः क्षेत्रपालः प्रचोदयात्
- इति क्षेत्रपाल गायत्री।
ॐ ऐं ह्रीं श्रीं-व्यापिकायै विद्महे नानारूपायै धीमहि तन्नो योगिनी प्रचोदयात्
- इति योगिनी गायत्री।
ॐ ऐं ह्रीं श्रीं-देवराजाय विद्महे वज्रहस्ताय धीमहि तन्नः शक्रः प्रचोदयात्
– इतीन्द्र गायत्री।
ॐ ऐं ह्रीं श्रीं-रुद्रनेत्राय विद्महे शक्तिहस्ताय धीमहि तन्नो वह्निः प्रचोदयात्
- इति वह्नि गायत्री।
ॐ ऐं ह्रीं श्रीं-वैवस्वताय विद्महे दण्डहस्ताय धीमहि तन्नो यमः प्रचोदयात्
- इति यम गायत्री।
ॐ ऐं ह्रीं श्रीं-निशाचराय विद्महे खड्गहस्ताय धीमहि तन्नो निर्ऋतिः प्रचोदयात्
- इति निर्ऋति गायत्री।
ॐ ऐं ह्रीं श्रीं-शुद्धहस्ताय विद्महे पाशहस्ताय धीमहि तन्नो वरुणः प्रचोदयात्
- इति वरुण गायत्री।
ॐ ऐं ह्रीं श्रीं-सर्वप्राणाय विद्महे यष्टिहस्ताय धीमहि तन्नो वायुः प्रचोदयात्
- इति वायु गायत्री।

ॐ ऐं ह्रीं श्रीं-यक्षेश्वराय विद्महे गदाहस्ताय धीमहि तन्नो यक्षः प्रचोदयात्

- इति कुबेर गायत्री।

ॐ ऐं ह्रीं श्रीं-सर्वेश्वराय विद्महे शूलहस्ताय धीमहि तन्नो रुद्रः प्रचोदयात्

- इति शिव गायत्री।

ॐ ऐं ह्रीं श्रीं-चतुराननाय विद्महे वेदवक्त्राय धीमहि तन्नो ब्रह्मा प्रचोदयात्

- इति ब्रह्म गायत्री।

ॐ ऐं ह्रीं श्रीं-पातालवासिने विद्महे सहस्रवदनाय धीमहि तन्नोऽनन्तः प्रचोदयात्

– इत्यनन्त गायत्री।

ॐ ऐं ह्रीं श्रीं-शतकोटिने विद्महे महावज्राय धीमहि तन्नो वज्रं प्रचोदयात्

- इति वज्र गायत्री।

ॐ ऐं ह्रीं श्रीं-तीक्ष्णभल्लाय विद्महे दीर्घदण्डाय धीमहि तन्नः शक्तिः प्रचोदयात्

- इति शक्ति गायत्री।

ॐ ऐं ह्रीं श्रीं-शत्रुघ्नाय विद्महे दीर्घकायाय धीमहि तन्नो दण्डः प्रचोदयात्

- इति दण्ड गायत्री।

ॐ ऐं ह्रीं श्रीं-तीक्ष्णधाराय विद्महे त्रिमूर्त्यात्मकाय धीमहि तन्नः खड्गः प्रचोदयात्

- इति खड्ग गायत्री।

ॐ ऐं ह्रीं श्रीं-जगदाकर्षणाय विद्महे महापाशाय धीमहि तन्नः पाशः प्रचोदयात्

- इति पाश गायत्री।

ॐ ऐं ह्रीं श्रीं-वशीकरणाय विद्महे महाङ्कुशाय धीमहि तन्नोऽङ्कुशः प्रचोदयात्

– इत्यङ्कुश गायत्री।

ॐ ऐं ह्रीं श्रीं-अयःसारायै विद्महे दीर्घगात्र्यै धीमहि तन्नो गदा प्रचोदयात्

- इति गदा गायत्री।

ॐ ऐं ह्रीं श्रीं-तीक्ष्णशिखाय विद्महे महाकायाय धीमहि तन्नः शूलं प्रचोदयात्

- इति शूल गायत्री।

ॐ ऐं ह्रीं श्रीं-रमावासाय विद्महे सहस्रपत्राय धीमहि तन्नः पद्मं प्रचोदयात्

- इति पद्म गायत्री।

ॐ ऐं ह्रीं श्रीं-सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नश्चक्रं प्रचोदयात्

- इति सुदर्शन गायत्री।

अथ षडङ्गदेवतानां गायत्र्यः -

ॐ ऐं ह्रीं श्रीं-हृदयदेव्यै विद्महे नमः पदस्थायै धीमहि तन्नो देवी प्रचोदयात्

- इति हृदयदेवी गायत्री।

ॐ ऐं ह्रीं श्रीं-शिरोदेव्यै च विद्महे स्वाहाकारायै धीमहि तन्नो देवी प्रचोदयात्

- इति शिरोदेवी गायत्री।

ॐ ऐं ह्रीं श्रीं-शिखादेव्यै च विद्महे वषट्कारायै धीमहि तन्नो देवी प्रचोदयात्

- इति शिखादेवी गायत्री।

ॐ ऐं ह्रीं श्रीं-कवचदेव्यै च विद्महे हुँकारायै च धीमहि तन्नो देवी प्रचोदयात्

- इति कवचदेवी गायत्री।

ॐ ऐं ह्रीं श्रीं-नेत्रदेव्यै च विद्महे वौषट्कारायै धीमहि तन्नो देवी प्रचोदयात्

- इति नेत्रदेवी गायत्री।

ॐ ऐं ह्रीं श्रीं-अस्त्रदेव्यै च विद्महे फट्कारायै च धीमहि तन्नो देवी प्रचोदयात्

- इति अस्त्रदेवी गायत्री।

- इति षडङ्गदेवतानां गायत्र्यः॥

अथ षोडशनित्यानां गायत्र्यः -

ॐ ऐं ह्रीं श्रीं-कामेश्वर्यै विद्महे नित्यक्लिन्नायै धीमहि तन्नो नित्या प्रचोदयात्

- इति कामेश्वरी गायत्री।

ॐ ऐं ह्रीं श्रीं-भगमालिन्यै विद्महे सर्ववशङ्कर्यै धीमहि तन्नो नित्या प्रचोदयात्

- इति भगमालिनी गायत्री।

ॐ ऐं ह्रीं श्रीं-नित्यक्लिन्नायै विद्महे नित्यमदद्रवायै धीमहि तन्नो नित्या प्रचोदयात्

- इति नित्यक्लिन्ना गायत्री।

ॐ ऐं ह्रीं श्रीं-भेरुण्डायै विद्महे विषहरायै धीमहि तन्नो नित्या प्रचोदयात्

- इति भेरुण्डा गायत्री।

ॐ ऐं ह्रीं श्रीं-वह्निवासिन्यै विद्महे सिद्धिप्रदायै धीमहि तन्नो नित्या प्रचोदयात्

- इति वह्निवासिनी गायत्री।

ॐ ऐं ह्रीं श्रीं-महावज्रेश्वर्यै विद्महे वज्रनित्यायै धीमहि तन्नो नित्या प्रचोदयात्

- इति महावज्रेश्वरी गायत्री।

ॐ ऐं ह्रीं श्रीं-शिवदूत्यै विद्महे शिवंकर्यै धीमहि तन्नो नित्या प्रचोदयात्
- इति शिवदूती गायत्री।
ॐ ऐं ह्रीं श्रीं-त्वरितायै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात्
- इति त्वरिता गायत्री।
ॐ ऐं ह्रीं श्रीं-कुलसुन्दर्यै विद्महे कामेश्वर्यै धीमहि तन्नः शक्तिः प्रचोदयात्
- इति कुलसुन्दरी गायत्री।
ॐ ऐं ह्रीं श्रीं-नित्याभैरव्यै विद्महे नित्यानित्यायै धीमहि तन्नो योगिनी प्रचोदयात्
- इति नित्याभैरवी गायत्री।
ॐ ऐं ह्रीं श्रीं-विजयादेव्यै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात्
- इति विजयादेवी गायत्री।
ॐ ऐं ह्रीं श्रीं-सर्वमङ्गलायै विद्महे सर्वात्मिकायै धीमहि तन्नो नित्या प्रचोदयात्
- इति सर्वमङ्गला गायत्री।
ॐ ऐं ह्रीं श्रीं-ज्वालामालिन्यै विद्महे महाज्वालायै धीमहि तन्नो देवी प्रचोदयात्
- इति ज्वालामालिनी गायत्री।
ॐ ऐं ह्रीं श्रीं-विचित्रायै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात्
- इति चित्रा गायत्री।
ॐ ऐं ह्रीं श्रीं-क ए ई ल ह्रीं त्रिपुरसुन्दरी विद्महे ह स क ह ल ह्रीं पीठकामिनी धीमहि स क ल ह्रीं तन्नः क्लिन्ने प्रचोदयात् - इति श्री ललितामहानित्या गायत्री।
- इति षोडशनित्यानां गायत्र्यः॥

अथ गुरुमण्डलदेवतानां गायत्र्यः -
ॐ ऐं ह्रीं श्रीं-उड्डीशनाथाय विद्महे श्रीदुर्वाससे धीमहि तन्नः कौलिः प्रचोदयात्।
ॐ ऐं ह्रीं श्रीं-षष्ठनाथाय विद्महे श्रीकुमाराय धीमहि तन्नः लक्ष्मीः प्रचोदयात्।
ॐ ऐं ह्रीं श्रीं-मित्रनाथाय विद्महे श्रीकण्ठाय धीमहि तन्नः कुब्जिः प्रचोदयात्।
ॐ ऐं ह्रीं श्रीं-हंसहंसाय विद्महे परमहंसाय धीमहि तन्न हंसः प्रचोदयात्।
- इति गुरुमण्डलदेवतानां गायत्र्यः॥

प्रथमावरणदेवतानां गायत्र्यः

अथ सिद्धीनां गायत्र्यः-

४-अणिमासिद्ध्यै विद्महे वराभयहस्तायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इत्यणिमासिद्धी गायत्री। ४-लघिमासिद्ध्यै विद्महे निधिवाहनायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति लघिमासिद्धी गायत्री। ४-महिमासिद्ध्यै विद्महे महासिद्ध्यै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति महिमासिद्धी गायत्री। ४-ईशित्वसिद्ध्यै विद्महे जगद्व्यापिकायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इतीशित्वसिद्धी गायत्री। ४-वशित्वसिद्ध्यै विद्महे शोणवर्णायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति वशित्वसिद्धी गायत्री। ४-प्राकाम्यसिद्ध्यै विद्महे निधिवाहनायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति प्राकाम्यसिद्धी गायत्री। ४-इच्छासिद्ध्यै विद्महे पद्महस्तायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इतीच्छासिद्धी गायत्री। ४-भुक्तिसिद्ध्यै विद्महे महासिद्ध्यै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति भुक्तिसिद्धी गायत्री। ४-रससिद्ध्यै विद्महे भक्तवत्सलायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति रससिद्धी* गायत्री। ४-मोक्षसिद्ध्यै विद्महे महानिर्मलायै धीमहि तन्नः सिद्धिः प्रचोदयात् - इति मोक्षसिद्धी** गायत्री।

(संप्रदायभेदानुसारे प्राप्तिसिद्धी* सर्वकामसिद्धी** इत्यपि वर्तते।)

- इति सिद्धीनां गायत्र्यः।

अथ मातृगायत्र्यः -

४-ब्राह्मशक्त्यै विद्महे पीतवर्णायै धीमहि तन्नो ब्राह्मी प्रचोदयात् - इति ब्राह्मी गायत्री। ४-श्वेतवर्णायै विद्महे शूलहस्तायै धीमहि तन्नो माहेश्वरी प्रचोदयात् - इति माहेश्वरी गायत्री। ४-शिखिवाहनायै विद्महे शक्तिहस्तायै धीमहि तन्नः कौमारी प्रचोदयात् - इति कौमारी गायत्री। ४-श्यामवर्णायै विद्महे चक्रहस्तायै धीमहि तन्नो वैष्णवी प्रचोदयात् - इति वैष्णवी गायत्री। ४-श्यामलायै विद्महे हलहस्तायै धीमहि तन्नो वाराही प्रचोदयात् - इति वाराही गायत्री। ४-श्यामवर्णायै विद्महे वज्रहस्तायै धीमहि तन्न ऐन्द्री प्रचोदयात् -इति माहेन्द्री गायत्री। ४-कृष्णवर्णायै विद्महे शूलहस्तायै धीमहि तन्नश्चामुण्डा प्रचोदयात् - इति चामुण्डादेवी गायत्री। ४-पीतवर्णायै विद्महे पद्महस्तायै धीमहि तन्नो लक्ष्मीः प्रचोदयात् - इति महालक्ष्मी गायत्री।

- इति मातृगायत्र्यः॥

अथ मुद्रागायत्र्यः -

४-सर्वसंक्षोभिण्यै विद्महे वरहस्तायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वसंक्षोभिणी गायत्री। ४-सर्वविद्राविण्यै विद्महे महाद्राविण्यै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वविद्राविणी गायत्री। ४-सर्वाकर्षिण्यै विद्महे महामुद्रायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वाकर्षिणी गायत्री। ४-सर्ववशङ्कर्यै विद्महे महावश्यायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्ववशङ्करी गायत्री। ४-सर्वोन्मादिन्यै विद्महे महामायायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वोन्मादिनी गायत्री। ४-महाङ्कुशायै विद्महे शोणवर्णायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वमहाङ्कुशादेवी गायत्री। ४-सर्वखेचर्यै विद्महे गगनवर्णायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वखेचरि गायत्री। ४-बीजरूपायै विद्महे महाबीजायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वबीजादेवी गायत्री। ४-महायोन्यै विद्महे विश्वजनन्यै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वयोनी गायत्री। ४-त्रिखण्डायै विद्महे त्रिकात्मिकायै धीमहि तन्नो मुद्रा प्रचोदयात् - इति सर्वत्रिखण्डादेवी गायत्री।

- इति मुद्रागायत्र्यः ॥

द्वितीयावरणदेवतानां गायत्र्यः

अथ षोडशदलदेवतानां गायत्र्यः -

४-कामाकर्षिण्यै विद्महे रक्तवस्त्रायै धीमहि तन्नः कला प्रचोदयात् - इति कामाकर्षणी गायत्री। ४-बुद्ध्याकर्षिण्यै विद्महे बुद्ध्यात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति बुद्ध्याकर्षणी गायत्री। ४-अहङ्काराकर्षिण्यै विद्महे तत्त्वात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति अहङ्काराकर्षणी गायत्री। ४-शब्दाकर्षिण्यै विद्महे सर्वशब्दात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति शब्दाकर्षणी गायत्री। ४-स्पर्शाकर्षिण्यै विद्महे स्पर्शात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति स्पर्शाकर्षणी गायत्री। ४-रूपाकर्षिण्यै विद्महे रूपात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति रूपाकर्षणी गायत्री। ४-रसाकर्षिण्यै विद्महे रसात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति रसाकर्षणी गायत्री। ४-गन्धाकर्षिण्यै विद्महे गन्धात्मिकायै धीमहि तन्नः कला प्रचोदयाय् - इति गन्धाकर्षणी गायत्री। ४-चित्ताकर्षिण्यै विद्महे चित्तात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति चित्ताकर्षणी गायत्री। ४-धैर्याकर्षिण्यै विद्महे धैर्यात्मिकायै धीमहि तन्नः कला

प्रचोदयात् - इति धैर्याकर्षणी गायत्री। ४-स्मृत्याकर्षिण्यै विद्महे स्मृतिस्वरूपिण्यै धीमहि तन्नः कला प्रचोदयात् - इति स्मृत्याकर्षणी गायत्री। ४-नामाकर्षिण्यै विद्महे नामात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति नामाकर्षणी गायत्री। ४-बीजाकर्षिण्यै विद्महे बीजात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति बीजाकर्षणी गायत्री। ४-आत्माकर्षिण्यै विद्महे आत्मस्वरूपिण्यै धीमहि तन्नः कला प्रचोदयात् - इति आत्माकर्षणी गायत्री। ४-अमृताकर्षिण्यै विद्महे अमृतस्वरूपिण्यै धीमहि तन्नः कला प्रचोदयात् - इति अमृताकर्षणी गायत्री। ४-शरीराकर्षिण्यै विद्महे शरीरात्मिकायै धीमहि तन्नः कला प्रचोदयात् - इति शरीराकर्षणी गायत्री।

- इति कामाकर्षिण्यादीनां षोडशदलदेवतानां गायत्र्यः॥

तृतीयावरणदेवतानां गायत्र्यः

अथ अष्टदलदेवतानां गायत्र्यः -

४-अनङ्गकुसुमायै विद्महे रक्तकञ्चुकायै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गकुसुमा गायत्री। ४-अनङ्गमेखलायै विद्महे पाशहस्तायै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गमेखला गायत्री। ४-अनङ्गमदनायै विद्महे शरहस्तायै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गमदना गायत्री। ४-अनङ्गमदनातुरायै विद्महे धनुर्हस्तायै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गमदनातुरा गायत्री। ४-अनङ्गरेखायै विद्महे दीर्घकेशिन्यै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गरेखा गायत्री। ४-अनङ्गवेगिन्यै विद्महे सृणिहस्तायै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गवेगिनी गायत्री। ४-अनङ्गाङ्कुशायै विद्महे नित्यक्लेदिन्यै धीमहि तन्नो देवी प्रचोदयात् - इति अनङ्गाकुशा गायत्री। ४-अनङ्गमालिन्यै विद्महे सुप्रसन्नायै धीमहि तन्नो देवी प्रचोदयात् इति अनङ्गमालिनी गायत्री।

- इत्यष्टदलदेवतानां गायत्र्यः॥

तुरीयावरणदेवतानां गायत्र्यः

अथ चतुर्दशारदेवतागायत्र्यः -

४-सर्वसंक्षोभिण्यै विद्महे बाणहस्तायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वसंक्षोभिणी गायत्री। ४-सर्वविद्राविण्यै विद्महे कार्मुकहस्तायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वविद्राविणी गायत्री। ४-सर्वाकर्षिण्यै विद्महे शोणवर्णायै

धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वाकर्षिणी गायत्री। ४-सर्वाह्लादिन्यै विद्महे जगद्व्यापिन्यै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वाह्लादिनी गायत्री। ४-सर्वसंमोहिन्यै विद्महे जगन्मोहिन्यै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वसंमोहिनी गायत्री। ४-सर्वस्तम्भिन्यै विद्महे जगत्स्तम्भिन्यै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वस्तम्भिनी गायत्री। ४-सर्वजृम्भिण्यै विद्महे जगद्रञ्जिन्यै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वजृम्भिणी गायत्री। ४-सर्ववशंकर्यै विद्महे महावशङ्कर्यै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्ववशङ्करि गायत्री। ४-सर्वरञ्जिन्यै विद्महे वैडूर्यवर्णायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वरञ्जिनी गायत्री। ४-सर्वोन्मादिन्यै विद्महे जगन्मायायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वोन्मादिनी गायत्री । ४-सर्वार्थसाधिन्यै विद्महे पुरुषार्थदायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वार्थसाधिनी गायत्री। ४-सर्वसंपत्प्रपूरिण्यै विद्महे संपदात्मिकायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वसंपत्तिपूरणी गायत्री। ४-सर्वमन्त्रमय्यै विद्महे मन्त्रमात्रे धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वमन्त्रमयि गायत्री। ४-सर्वद्वन्द्वक्षयंकर्यै विद्महे कालात्मिकायै धीमहि तन्नः शक्तिः प्रचोदयात् - इति सर्वद्वन्द्वक्षयङ्करि गायत्री।

- इति चतुर्दशारदेवतागायत्र्यः॥

पञ्चमावरणदेवतानां गायत्र्यः

अथ बहिर्दशारदेवता गायत्र्यः -

४-सर्वसिद्धिप्रदायै विद्महे श्वेतवर्णायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वसिद्धिप्रदा गायत्री। ४-सर्वसंपत्प्रदायै विद्महे महालक्ष्म्यै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वसंपत्प्रदा गायत्री। ४-सर्वप्रियंकर्य्यै विद्महे कुन्दवर्णायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वप्रियङ्करि गायत्री। ४-सर्वमङ्गलकारिण्यै विद्महे मङ्गलात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वमङ्गलकारिणी गायत्री। ४-सर्वकामप्रदायै विद्महे कल्पलतात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वकामप्रदा गायत्री। ४-सर्वदुःखविमोचिन्यै विद्महे हर्षप्रदायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वदुःखविमोचिनी गायत्री। ४-सर्वमृत्युप्रशमन्यै विद्महे सर्वसञ्जीविन्यै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वमृत्युप्रशमनी गायत्री। ४-सर्वविघ्ननिवारिण्यै विद्महे सर्वकामायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वविघ्ननिवारिणी गायत्री। ४-सर्वाङ्गसुन्दर्यै विद्महे जगद्योन्यै धीमहि तन्नो

देवी प्रचोदयात् - इति सर्वाङ्गसुन्दरि गायत्री। ४-सर्वसौभाग्यदायिन्यै विद्महे जगज्जनन्यै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वसौभाग्यदायिनी गायत्री।
- इति बहिर्दशारदेवतागायत्र्यः ॥

षठ्यावरणदेवतानां गायत्र्यः

अथ अन्तर्दशारदेवतागायत्र्यः –

४-सर्वज्ञायै विद्महे महामायायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वज्ञा गायत्री। ४-सर्वशक्त्यै विद्महे महाशक्त्यै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वशक्ति गायत्री। ४-सर्वैश्वर्यप्रदायै विद्महे ऐश्वर्यात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वैश्वर्यप्रदा गायत्री। ४-सर्वज्ञानमय्यै विद्महे ज्ञानात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वज्ञानमयि गायत्री। ४-सर्वव्याधिविनाशिन्यै विद्महे औषधात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वव्याधिविनाशिनी गायत्री। ४-सर्वाधारस्वरूपिण्यै विद्महे आधारात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वाधारस्वरूपा गायत्री। ४-सर्वपापहरायै विद्महे सर्वतीर्थस्वरूपिण्यै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वपापहरा गायत्री। ४-सर्वानन्दमय्यै विद्महे महानन्दायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वानन्दमयि गायत्री। ४-सर्वरक्षास्वरूपिण्यै विद्महे सर्वरक्षणायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वरक्षास्वरूपिणी गायत्री। ४-सर्वेप्सितफलप्रदायै विद्महे फलात्मिकायै धीमहि तन्नो देवी प्रचोदयात् - इति सर्वेप्सितप्रदा गायत्री।
- इति अन्तर्दशारदेवतागायत्र्यः ॥

सप्तमावरणदेवतानां गायत्र्यः

अथ अष्टारदेवता गायत्र्यः -

४-वशिनीदेव्यै विद्महे पुस्तकहस्तायै धीमहि तन्नो वाचा प्रचोदयात् - इति वशिनी गायत्री। ४-कामेश्वर्यै विद्महे वाग्देव्यै धीमहि तन्नो वाचा प्रचोदयात् - इति कामेश्वरि गायत्री। ४-मोदिनीदेव्यै विद्महे महावाण्यै धीमहि तन्नो वाचा प्रचोदयात् - इति मोदिनी गायत्री। ४-विमलादेव्यै विद्महे मालाधरायै धीमहि तन्नो वाचा प्रचोदयात् - इति विमला गायत्री। ४-अरुणावाग्देव्यै विद्महे श्वेतवर्णायै धीमहि तन्नो वाचा प्रचोदयात् - इति अरुणा गायत्री। ४-जयिनीदेव्यै विद्महे महावागीश्यै धीमहि तन्नो वाचा प्रचोदयात् - इति जयिनी गायत्री। ४-सर्वेश्वर्यै विद्महे

सर्ववागीश्यै धीमहि तन्नो वाचा प्रचोदयात् - इति सर्वेश्वरि गायत्री। ४-कौलिनीदेव्यै विद्महे कुलमार्गगायै धीमहि तन्नो वाचा प्रचोदयात् - इति कौलिनि गायत्री।
- इति अष्टारदेवतागायत्र्यः॥

<u>अथ अष्टान्तरालचक्रदेवता गायत्र्यः -</u>

४-महाबाणिन्यै विद्महे पुष्पात्मिकायै धीमहि तन्नो बाणा प्रचोदयात् - इति बाणिनी गायत्री। ४-पुष्पचापिन्यै विद्महे पुण्ड्रात्मिकायै धीमहि तन्नश्चापा प्रचोदयात् - इति चापिनी गायत्री। ४-पुष्पपाशिन्यै विद्महे पाशाच्छेदिन्यै धीमहि तन्नः पाशिनी प्रचोदयात् - इति पाशिनी गायत्री। ४-अङ्कुशिन्यै विद्महे पुष्पात्मिकायै धीमहि तन्नः सृणिः प्रचोदयात् - इति अङ्कुशिनी गायत्री।
- इति अष्टारान्तरालचक्रदेवतागायत्र्यः॥

अष्टमावरणदेवतानां गायत्र्यः

अथ त्रिकोणाग्रस्थदेवता गायत्र्यः -

४-कामरूपवासिन्यै विद्महे ब्रह्मशक्त्यै धीमहि तन्नः कामेश्वरी प्रचोदयात् - इति महाकामेश्वरि गायत्री। ४-पूर्णपीठस्थायै विद्महे विष्णुशक्त्यै धीमहि तन्नः वज्रेश्वरी प्रचोदयात् - इति महावज्रेश्वरि गायत्री। ४-जालन्धरस्थायै विद्महे रुद्रशक्त्यै धीमहि तन्नः भगमालिनी प्रचोदयात् - इति महाभगमालिनी गायत्री। ४-ओड्याणस्थायै विद्महे परब्रह्मशक्त्यै धीमहि तन्नः सुन्दरी प्रचोदयात् - इति महाश्रीसुन्दरी गायत्री
- इति  त्रिकोणाग्रस्थदेवतागायत्र्यः॥

नवमावरणदेवता गायत्र्यः

अथ बिन्दौ गायत्री -

४- क ए ई ल ह्रीं त्रिपुरसुन्दरि विद्महे  ह स क ह ल ह्रीं पीठकामिनि धीमहि
स क ल ह्रीं तन्नः क्लिन्ने प्रचोदयात्।
-इति पराभट्टारिका गायत्री॥

अथ चक्रेश्वरीणां गायत्र्यः -

४-त्रिपुरादेव्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुरा गायत्री। ४-त्रिपुरेश्वर्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुरेशी गायत्री। ४-त्रिपुरसुन्दर्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुरसुन्दरी गायत्री। ४-त्रिपुरवासिन्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुरवासिनी गायत्री। ४-त्रिपुराश्रियै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुराश्री गायत्री। ४-त्रिपुरमालिन्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुरमालिनी गायत्री। ४-त्रिपुरासिद्धायै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुरासिद्धा गायत्री। ४-त्रिपुराम्बायै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति त्रिपुराम्बा गायत्री। ४-महात्रिपुरसुन्दर्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात् - इति महात्रिपुरसुन्दरी गायत्री।

- इति चक्रेश्वरीगायत्र्यः॥

अथ पञ्चपञ्चिकागणगायत्र्यः -

अथ पञ्चलक्ष्म्यः गायत्र्यः-

४-श्रीविद्यायै विद्महे महाश्रियै धीमहि तन्नः श्रीः प्रचोदयात्
- इति श्रीविद्या गायत्री।

४-लक्ष्म्यै देव्यै विद्महे श्रीदेव्यै धीमहि तन्नः श्रीः प्रचोदयात्
- इति लक्ष्मीदेवी गायत्री।

४-महालक्ष्म्यै विद्महे महाश्रियै धीमहि तन्नः श्रीः प्रचोदयात्
- इति महालक्ष्मी गायत्री।

४-त्रिशक्तिलक्ष्म्यै विद्महे महाभैरव्यै धीमहि तन्नः श्रीः प्रचोदयात्
- इति त्रिशक्तिलक्ष्मी गायत्री।

४-साम्राज्यलक्ष्म्यै विद्महे जयङ्कर्य्यै धीमहि तन्नः श्रीः प्रचोदयात्
- इति साम्राज्यलक्ष्मीगायत्री।

-इति पञ्चलक्ष्म्यः गायत्र्यः॥

-

-

अथ पञ्चकोशाः -

४-श्रीविद्यायै विद्महे महाकोशेश्वर्यै धीमहि तन्नः कोशा प्रचोदयात्

- इति श्रीविद्या गायत्री।

४-परंज्योतिषे विद्महे प्रणवात्मिकायै धीमहि तन्नः कोशा प्रचोदयात्

- इति परंज्योतिष गायत्री।

४-परनिष्कलायै विद्महे परशांभव्यै धीमहि तन्नः कोशा प्रचोदयात्

- इति परनिष्कला गायत्री।

४-अजपायै विद्महे हंसात्मिकायै धीमहि तन्नः कोशा प्रचोदयात्

- इति अजपा गायत्री।

४-मातृकायै विद्महे वागीश्वर्यै धीमहि तन्नः कोशा प्रचोदयात्

- इति मातृका गायत्री।

- इति पञ्चकोशाः गायत्र्यः॥

अथ पञ्चकल्पलताः -

४-श्रीविद्यायै विद्महे कल्पलतेश्वर्यै धीमहि तन्नः कल्पलता प्रचोदयात्

- इति श्रीविद्या गायत्री।

४-त्वरितादेव्यै विद्महे महादेव्यै धीमहि तन्नः कल्पलता प्रचोदयात्

- इति त्वरिता गायत्री।

४-पारिजातेश्वर्यै विद्महे कामप्रदायै धीमहि तन्नः कल्पलता प्रचोदयात्

- इति पारिजातेश्वरी गायत्री।

४-त्रिकूटायै विद्महे जगज्जनन्यै धीमहि तन्नः कल्पलता प्रचोदयात्

- इति त्रिकूटा गायत्री।

४-पञ्चबाणेश्यै विद्महे सर्वसंक्षोभिण्यै धीमहि तन्नः कल्पलता प्रचोदयात्

- इति पञ्चबाणेशी गायत्री।

- इति पञ्चकल्पलताः गायत्र्यः॥

अथ पञ्चकामदुघानां गायत्र्यः -

४-श्रीविद्यायै विद्महे कामदुघेश्वर्यै धीमहि तन्नः कामदुघा प्रचोदयात्
- इति श्रीविद्या गायत्री।

४-अमृतपीठेश्यै विद्महे अमृतेश्वर्यै धीमहि तन्नः कामदुघा प्रचोदयात्
- इति अमृतपीठा गायत्री।

४-सुधासूत्यै विद्महे सुधात्मिकायै धीमहि तन्नः कामदुघा प्रचोदयात्
- इति सुधासूता गायत्री।

४-अमृतेश्वर्यै विद्महे विश्वदीपिन्यै धीमहि तन्नः कामदुघा प्रचोदयात्
- इति अमृतेश्वरी गायत्री।

४-अन्नपूर्णायै विद्महे सर्वसंजीविन्यै धीमहि तन्नः कामदुघा प्रचोदयात्
- इति अन्नपूर्णा गायत्री।

- इति पञ्चकामदुघानांगायत्र्यः॥

अथ पञ्चरत्नविद्यानां गायत्र्यः -

४-श्रीविद्यायै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्
- इति श्रीविद्या गायत्री।

४-सिद्धलक्ष्म्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्
- इति सिद्धलक्ष्मी गायत्री।

४-मातङ्गिन्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्
- इति मातङ्गी गायत्री।

४-भुवनेश्वर्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्
- इति भुवनेश्वरी गायत्री।

४-वाराह्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्
- इति वाराही गायत्री।

- इति पञ्चरत्नविद्याः गायत्र्यः॥

इति पञ्चपञ्चिकागणगायत्र्यः॥

अथ षड्दर्शनगायत्र्यः -

४-चतुराननाय विद्महे वेदवक्त्राय धीमहि तन्नो ब्रह्मा प्रचोदयात्

- इति ब्रह्म गायत्री। (वैदीकदर्शनम्)

४-नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्

- इति विष्णु गायत्री। (वैष्णवदर्शनम्)

४-आदित्याय विद्महे मार्ताण्डाय धीमहि तन्नः सूर्यः प्रचोदयात्

- इति सूर्य गायत्री। (सौरदर्शनम्)

४-सर्वेश्वराय विद्महे शूलहस्ताय धीमहि तन्नो रुद्रः प्रचोदयात्

- इति शिव गायत्री। (शैवदर्शनम्)

४-महासिद्धाय विद्महे सर्वज्ञाय धीमहि तन्नो बुद्धः प्रचोदयात्

- इति बुद्ध गायत्री।(बौद्धदर्शनम्)

४-सर्वसंमोहिन्यै विद्महे विश्वजनन्यै धीमहि तन्नः शक्तिः प्रचोदयात्

- इति शक्ति गायत्री। (शाक्तदर्शनम्)

- इति षड्दर्शनगायत्र्यः॥

अथ समयविद्यानां गायत्र्यः -

<u>पूर्वसमया -</u>

४-सर्वोन्मन्यै विद्महे विश्वजनन्यै धीमहि तन्नो देवी प्रचोदयात्

- इति सर्वोन्मनी गायत्री।

<u>दक्षिणसमया-</u>

४-बगलाम्बायै विद्महे ब्रह्मास्त्रविद्यायै धीमहि तन्नः स्तम्भिनी प्रचोदयात्

- इति बगलाम्बा गायत्री।

<u>पश्चिमसमया-</u>

४-कालरात्र्यै विद्महे कालेश्वर्यै धीमहि तन्नो मोहिनी प्रचोदयात्

- इति कालरात्री गायत्री।

तन्त्रान्तरेषु जयदुर्गा-कुब्जिका-प्रत्यङ्गिरा-दुर्गाः पश्चिमसमये देवता इति। तथा-

४-नारायण्यै विद्महे दुर्गायै धीमहि तन्नो गौरी प्रचोदयात्

- इति जयदुर्गा गायत्री।

४-कुब्जिकायै विद्महे नरान्त्रमालायै धीमहि तन्नो देवी प्रचोदयात्

- इति कुब्जिका गायत्री।

४-अपराजितायै विद्महे प्रत्यङ्गिरायै धीमहि तन्नः उग्रा प्रचोदयात्

- इति प्रत्यङ्गिरा गायत्री।

४-महादेव्यै विद्महे दुर्गायै धीमहि तन्नो देवी प्रचोदयात्

- इति दुर्गा गायत्री।

<u>उत्तरसमया-</u>

४-वज्रवैरोचिन्यै विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयात्

- इति छिन्नमस्ता गायत्री।

४-कालिकायै विद्महे श्मशानवसिन्यै धीमहि तन्नो घोरे प्रचोदयात्

- इति काली गायत्री।

४-तारायै विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयात्

- इति तारा गायत्री।

(आम्नायविद्यानां गायत्र्योऽत्रैवान्तर्भूता बोद्धव्याः।)

ॐ तत् सत्॥



